*Poona Oriental Series No. 48*



महाकविभट्टबाणविरचिता

# कादम्बरी



THE

# KĀDAMBARĪ

A ROMANCE IN SANSKRIT PROSE

BY

BĀṆABHAṬṬA

VOL. I (TEXT COMPLETE)

EDITED BY

DR P. L. VAIDYA

M.A. (CAL); D.LITT. (PARIS)

PROFESSOR OF SANSKRIT AND ALLIED LANGUAGES

NOWROSJEE WADIA COLLEGE, POONA



POONA

ORIENTAL BOOK AGENCY

1935

*Poona Oriental Series No. 48*

महाकविभट्टबाणविरचिता

# कादम्बरी



THE

# KĀDAMBARĪ

A ROMANCE IN SANSKRIT PROSE

BY

BĀṆABHAṬṬA

VOL. I (TEXT)



EDITED BY

DR P. L. VAIDYA
M.A. (CAL); D.LITT. (PARIS)
PROFESSOR OF SANSKRIT AND ALLIED LANGUAGES
NOWROSJEE WADIA COLLEGE, POONA




POONA
ORIENTAL BOOK AGENCY
1935

# भूमिका।

महाकवेर्बाणभट्टस्य कृतिषु परां प्रसिद्धिमुपगतस्य कादम्बरीति सुविख्यातनाम्नो गद्यप्रबन्धस्य नूतनामिमामङ्कनावृत्तिं पाठकानामद्य समुपाहरतां प्रमोदमावहति नश्चेतः। अस्यामङ्कनावृत्तौ मूलग्रन्थः पाठान्तरादिपरिष्कृतोऽध्यापनसौकर्यार्थं च परिच्छेदादिविभक्तो मुद्रितः। मोहमयीस्थराजकीयसंस्कृतग्रन्थमालायां पीटर्सनमहाशयेन संस्कृतस्यास्य ग्रन्थस्य यावन्ति पृष्ठानि यावन्तश्च परिच्छेदा विद्यन्ते तावन्त्येव पृष्ठानि तावन्त एव च परिच्छेदा अस्यामङ्कनावृत्तौ कल्पिताः, यावानेव ग्रन्थांशः प्रतिपृष्ठं तावानेवात्रापि, येन विद्यार्थिनां पाठकानां च ग्रन्थाद्युल्लेखक्रियायां सौकर्यं स्यात्। विरामचिह्नादिसंयोजनं यावच्छक्यं सामासिकशब्दानां पङ्क्त्यन्ते विश्लेषपद्धतिश्च यथा वाचनसौकर्यमर्थावबोधसौकर्यं च भजेत तथाङ्गीकृता। तदेवं परिष्कृतस्यास्य ग्रन्थस्योपयोगेन वाचकानां बहूपकृतं स्यादित्याशास्ते संपादकः।

अनेन कविना स्वीये हर्षचरिताख्ये ग्रन्थे स्वेतिवृत्तं प्रायो विस्तरशः प्रतिपादितम्। कादम्बर्यामपि प्रास्ताविकश्लोकेषु संक्षेपतः पूर्वजानामनेनोल्लेखः कृतः। स यथा–

बभूव वात्स्यायनवंशसंभवो द्विजो जगद्गीतगुणोऽग्रणीः सताम्।
अनेकगुप्तार्चितपादपङ्कजः कुबेरनामांश इव स्वयंभुवः॥ १० ॥
हिरण्यगर्भो भुवनाण्डकादिव क्षपाकरः क्षीरमहार्णवादिव।
अभूत्सुपर्णो विनतोदरादिव द्विजन्मनामर्थपतिः पतिस्ततः॥ १३ ॥
स चित्रभानुं तनयं महात्मनां सुतोत्तमानां श्रुतिशास्त्रशालिनाम्।
अवाप मध्ये स्फटिकोपलोपमं क्रमेण कैलासमिव क्षमाभृताम्॥ १६ ॥
सरस्वतीपाणिसरोजसंपुटप्रमृष्टहोमश्रमसीकराम्भसः।
यशांशुशुक्लीकृतसप्तविष्टपात्ततः सुतो बाण इति व्यजायत॥ १९ ॥

महाकवेर्भट्टबाणस्य पूर्वजाः शोणापरपर्यायहिरण्यबाहोस्तीरे प्रीतिकूटाख्ये ग्रामे न्यवसन्। अस्य माता राजदेवी नाम बाल्य एव पञ्चत्वमगात्। पितापि चित्रभानुश्चतुर्दशवर्षदेशीय एव भट्टबाणे लोकान्तरमुपागतः। ततोनन्तरं

भट्टबाणो वयस्यैः सहायैश्च सह ग्रामाद् ग्राममटन् देशान्तरदर्शनकुतूहलाकृष्टचित्तो बह्वोः कालात्पुनर्ब्राह्मणाधिवासं प्रीतिकूटं प्रत्याजगाम। तथा च हर्षचरिते–

"अभवंश्चास्य वयसा समानाः सुहृदः सहायाश्च। तथा च। भ्रातरौ पारशवौ चन्द्रसेनमातृषेणौ, भाषाकविरीशानः परं मित्रम्, प्रणयिनौ रुद्रनारायणौ, विद्वांसौ वारबाणवासबाणौ, वर्णकविर्वेणीभारतः, प्राकृतकृत्कुलपुत्रो वायुविकारः, बन्दिनावनङ्गबाणसूचीबाणौ, कात्यायनिका चक्रवाकिका, जाङ्गुलिको मयूरकः, ताम्बूलदायकश्चण्डकः, भिषक्पुत्रो मन्दारकः, पुस्तकवाचकः सुदृष्टिः, कलादश्चामीकरः, हैरिकः सिन्धुषेणः, लेखको गोविन्दकः, चित्रकृद्वीरवर्मा, पुस्तकृत्कुमारदत्तः, मार्दङ्गिको जीमूतः, गायनौ सोमिलग्रहादित्यौ, सैरन्ध्री कुरङ्गिका, वांशिकौ मधुकरपारावतौ; गान्धर्वोपाध्यायो दर्दुरकः, संवाहिका केरलिका, लासकयुवा ताण्डविकः, आक्षिक आखण्डलः, कितवो भीमकः,शैलालियुवा शिखण्डकः, नर्तकी हरिणिका, पाराशरी सुमतिः, क्षपणको वीरदेवः, कथको जयसेनः, शैवो वक्रघोणः, मन्त्रसाधकः, करालः, असुरविवरव्यसनी लोहिताक्षः, धातुवादविद्विहंगमः, दार्दुरिको दामोदरः, ऐन्द्रजालिकश्चकोराक्षः, मस्करी ताम्रचूडः।"

सूर्यशतककर्ता मयूरकविर्मातङ्गदिवाकरश्च भट्टबाणस्य समकालिकावास्तामित्यपि प्रसिद्धिः। तथा च सुभाषितावलीस्थे शार्ङ्गधरपद्धतिस्थे च राजशेखरीये–

अहो प्रभावो वाग्देव्या यन्मातङ्गदिवाकरः।
श्रीहर्षस्याभवत्सभ्यः समो बाणमयूरयोः॥

नवसाहसाङ्कचरिते द्वितीयसर्गे च–

स चित्रवर्णविच्छित्तिहारिणोरवनीपतिः।
श्रीहर्ष इव संघट्टं चक्रे बाणमयूरयोः॥ १८॥

एकस्मिन्निदाघदिवसेऽतिक्रान्ते मध्यमह्नः सवितरि भुक्तोपविष्टस्य भट्टबाणस्य पारशवो भ्राता चन्द्रसेनः श्रीहर्षभ्रात्रा कृष्णराजेन प्रेषितं मेखलकनामानं लेखहारकं प्रावेशयत्। तदानीतलेखार्थस्त्वयम्–श्रीहर्षराजस्य चित्तं भट्टबाणविषये केनापि पिशुनेन कलुषीकृतमासीत्। किं तु परिज्ञातभूतार्थेन

कृष्णराजेन श्रीहर्षदेवस्तथानुनीतो यथा 'यौवनसुलभं विकारमुत्सृज्य भट्टबाणेन न किमप्यपराद्धं न वा किमपि लोकविरुद्धमाचरितम्' इत्यस्मिन्विषये श्रीहर्षदेवः प्रत्ययमपि ग्राहितः। अतोयमेव समुचितः कालो भट्टबाणस्य श्रीहर्षसभां प्रवेष्टुमिति। अमुं लेखार्थं पुनःपुनर्विमृश्य भट्टबाणो मणितारोपकण्ठेऽजिरावत्यां स्कन्धावारस्थं श्रीहर्षदेवं द्रष्टुं प्रीतिकूटात्प्रतस्थे। अनुभूय च सुचिरं विविधान् राजप्रसादान् स्थित्वा च तत्र कियन्तं कालं स पुनः प्रीतिकूटं प्रत्याजगाम। प्रत्यागतमेनं सुहृदः सहायाश्च सविशेषं सभाजयामासुः। पुस्तकवाचकः सुदृष्टिर्वायुपुराणमस्यावाचयत्। सूचिबाणो बन्दी हर्षचरितमुद्दिश्यार्याद्वयं पपाठ येन सुतरामनुरञ्जितः पितृव्यपुत्रेषु कनीयान् श्यामलो भट्टबाणमा मूलाद्धर्षचरितमुपवर्णयितुं व्यजिज्ञपत्। भट्टबाणोऽपि तेनैव प्रस्तावेन हर्षचरिताख्यं ग्रन्थं रचयामास।

इतोऽधिकं भट्टबाणस्य जीवनविषये न किमप्युपलभ्यते। अपरिसमाप्तायामेव कादम्बर्यां स पञ्चत्वमगात्। तत्पुत्रश्चावशिष्टं ग्रन्थं पूरयामास। यथोत्तरभागभूमिकायाम्—

याते दिवं पितरि तद्वचसैव सार्धं
विच्छेदमाप भुवि यस्तु कथाप्रबन्धः।
दुःखं सतां तदसमाप्तिकृतं विलोक्य
प्रारब्ध एव स मया न कवित्वदर्पात्॥ ४॥

भट्टबाणसूनोर्नाम भूषणभट्ट इति बुल्हरमहाशयस्य मतम्। पुस्तकान्तरेषु तु क्वचित् पुलिन्द इति पुलिन्ध्र इति पुलिन इति वा नाम्ना तस्योल्लेखो दृश्यते। यथा धनपालविरचितायां तिलकमञ्जर्याम्—

केवलोऽपि स्फुरन् बाणः करोति विमदान् कवीन्।
किं पुनः क्लृप्तसंधानपुलिन्ध्र (पुलिन्द) कृतसंनिधिः॥ २६॥

अन्येषां गीर्वाणभाषाकवीनामिव भट्टबाणस्य कालनिर्णये न कोऽपि विवादः संशीतिर्वा विदुषां मतेषु। श्रीहर्षदेवसमकालीनत्वाद्भट्टबाणस्य य एव श्रीहर्षदेवस्य समयः स एवास्य भवितुमर्हति। श्रीहर्षदेवकालनिर्णये तु चीनदेशीययात्रिकस्य हुएनत्संगाख्यस्य प्रवासवृत्तमेव बलीयः प्रमाणम्। तदनुसारेणेदं ज्ञायते यथा श्रीहर्षदेवः खिस्ताब्दगणनया षडधिके षट्शते

सिंहासनमारूढः, अष्टचत्वारिंशदधिकषट्शतपर्यन्तं च राज्यमकरोत्। एवं च भट्टबाणोऽपि षष्ठयाः शताब्द्याश्चरमे सप्तम्याश्च प्रारम्भे स्वां जीवितयात्रां निरवहदिति गम्यते।

भट्टबाणस्य ग्रन्थाः क्वचिन्नामग्राहं क्वचिच्चांशोद्धरणेन तैस्तैरुत्तरकालवर्तिभिः कविभिरालंकारिकैश्च निर्दिष्टा दृश्यन्ते। ते च कवीनां समयनिर्देशपुरस्सरमत्र प्रदर्श्यन्ते।

( १ ) द्वादश्याः शताब्द्याः प्रथमार्धस्थो रुय्यकः स्वीयेऽलंकारसर्वस्वाख्ये ग्रन्थे "'यस्तपोवनमिति मुनिभिः' इत्यादि हर्षचरिते श्रीकण्ठाख्यजनपदवर्णने"; "यथा हर्षचरिते राज्यवर्धनं प्रति श्रीहर्षोक्तिषु 'यदि बाल इति सुतरामपरित्याज्योऽस्मीति'"। अनेनैव रुय्यकेन हर्षचरितोपरि वार्तिकं विरचितम्। यथालंकारसर्वस्वे "एषा च ( उत्प्रेक्षा ) समस्तोपमाप्रतिपादकविषयेऽपि हर्षचरितवार्तिके साहित्यमीमांसायां च तेषु तेषु प्रदेशेषूदाहृता"।

( २ ) एकादश्याः शताब्द्या उत्तरार्धस्थेन काश्मीरिकक्षेमेन्द्रेणौचित्यविचारचर्चायां कादम्बरीस्था "स्तनयुगमश्रुस्नातम्" इत्यार्या, तथा च तत्स्थ एव "जयत्युपेन्द्रः स चकार दूरतः" इति श्लोक उदाहृतः।

( ३ ) नमिसाधुश्च रुद्रटीयकाव्यालंकारस्य व्याख्यायां कथाख्यायिकयोर्भेदप्रदर्शनार्थं कादम्बरीहर्षचरिते नामग्राहं निर्दिशति। इयं व्याख्यैकोनसप्तत्यधिकसहस्रपरिमिते ख्रिस्ताब्दे लिखितेत्यन्तिमश्लोकादनुमीयते।

( ४ ) एकादश्याः शताब्द्याः प्रथमार्धे राज्यमधिष्ठितस्य भोजराजस्य कृतौ सरस्वतीकण्ठाभरणे—

याद‍ृग्गद्यविधौ बाणः पद्यबन्धे न ताद‍ृशः।

इत्युल्लिख्यते।

( ५ ) धनंजयकृते दशरूपके "यथा हि महाश्वेतावर्णनावसरे भट्टबाणस्य" "यथा कादम्बर्यां वैशम्पायनस्य" इति भट्टबाणं च कादम्बरीं च स्मरति। अयं धनंजयो भोजपितृव्यमुञ्जराजसभापण्डित आसीत्।

( ६ ) अभिनन्दश्च कादम्बरीसारकर्ता क्षेमेन्द्रेण स्वीये सुवृत्ततिलकाख्ये ग्रन्थे—

अनुष्टुप्ससततासक्ता साभिनन्दस्य नन्दिनी ।
विद्याधरस्य वदने गुलिकेव प्रभावभूः ॥

इत्युल्लेखितः । अतः क्षेमेन्द्रात्पूर्वकालिकः ।

( ७ ) आनन्दवर्धनाचार्यैः स्वीये ध्वन्यालोके कादम्बरी हर्षचरितं बहुशो नामग्राहं निर्दिष्टे । काश्मीरिकावन्तिवर्मणः सभायां विद्यमानानामेषां नवमस्याः शताब्द्या उत्तरार्धं कालः ।

( ८ ) वामनश्च काव्यालंकारसूत्रवृत्तौ 'अनुकरोति भगवतो नारायणस्य' इत्यत्रापि, मन्ये, स्मशद्बःकविना प्रयुक्तो लेखकैस्तु प्रमादान्न लिखितः" इति लिखति । अयं वामनोऽष्टमस्यां शताब्द्यां जात इति विदुषां मतम् ॥

भट्टबाणः स्वीये हर्षचरितप्रस्तावे बहून् पूर्वकालीनान् कवीन् कविकृतीश्च स्मरति । तद्यथा–व्यासः, वासवदत्ता, भट्टारहरिचन्द्रः, सातवाहनः, सेतुकृत्प्रवरसेनः, भासः, कालिदासः, बृहत्कथा, आढ्यराजश्च । अतः प्रमाणाद्भट्टबाणः षष्ठ्याः शताब्द्या अन्ते सप्तम्याश्च प्रारम्भे समभूदिति निर्णेतुं पार्यते ।

कादम्बरी हर्षचरितं चेति द्वावपि ग्रन्थौ भट्टबाणकृतित्वेन प्रसिद्धौ । चण्डीशतकं पार्वतीपरिणयाख्यं नाटकमिति द्वावपरौ ग्रन्थौ भट्टबाणविरचितावित्यस्ति प्रसिद्धिः । तथा च पार्वतीपरिणयस्य प्रस्तावनायाम्–

अस्ति कविसार्वभौमो वत्सान्वयजलधिकौस्तुभो बाणः ।
नृत्यति यद्रसनायां वेधोमुखलासिका वाणी ॥

किं तु पार्वतीपरिणयकर्ता बाणो वामनभट्टबाणः कादम्बरीकर्तुर्भट्टबाणाद्भिन्न एवेति केषांचिन्मतम् । नलचम्पूटीकाकारौ चण्डपालगुणविनयौ मुकुटताडितकाख्यमपरं नाटकं भट्टबाणकृतमित्युल्लिखतः । यथा–

"यदाह मुकुटताडितके बाणः–

आशाः प्रोषितदिग्गजा इव गुहाः प्रध्वस्तसिंहा इव
द्रोण्यः कृत्तमहाद्रुमा इव भुवः प्रोत्खातशैला इव ।
बिभ्राणाः क्षयकालरिक्तसकलत्रैलोक्यकष्टां दशा
जाताः क्षीणमहारथाः कुरुपतेर्देवस्य शून्याः सभाः ॥"

तथा कादम्बरीकथामुद्दिश्य भट्टबाणेनैव किमपि काव्यं निरमायीत्यपि क्षेमेन्द्रविरचिताया औचित्यविचारचर्चाया ज्ञायते । यथा—

" यथा वा भट्टबाणस्य–
' हारो जलार्द्रवसनं नलिनीदलानि प्रालेयशीकरमुचस्तुहिनांशुभासः ।
यस्येन्धनानि सरसानि च चन्दनानि निर्वाणमेष्यति कथं स मनोभवाग्निः॥'
अत्र विप्रलम्भभरभग्नधैर्यायाः कादम्बर्या विरहव्यथावर्णना " ।

किं त्वेतयोर्ग्रन्थयोर्नामाप्यन्यत्र नोपलभ्यते । कदाचित्क्षेमेन्द्रविरचितात्पद्यकादम्बरीनाम्नो ग्रन्थादेव श्लोकोऽयमुद्धृतः स्यात् ।

श्रीहर्षादेर्बाणादीनामिव धनमिति कतिपयपुस्तकदृश्यमानकाव्यप्रकाशस्थपाठाद्यत्कैश्चिदनुमीयते यथा रत्नावलीप्रियदर्शिकानागानन्दानि त्रीणि नाटकानि भट्टबाणेनैव रचयित्वा धनं गृहीत्वा श्रीहर्षाय प्रदत्तानीति, तत्तु न प्रमाणपदवीमारोढुमर्हति, सर्वत्रापि नाटकत्रयस्य श्रीहर्षनाम्नोल्लेखात्, भट्टबाणकृतित्वेन च क्वाप्यनुल्लेखात् ।

गीर्वाणभाषावाङ्मये भट्टबाणो गद्यकवीनां मूर्धन्यः । स खलु प्रायः पाञ्चालीं रीतिमनुसरन्, क्वचित्समासभूयस्त्वेनोजोगुणं दधानः, सरससरलैर्मधुरैश्च वाक्प्रपञ्चैर्मनांसि रञ्जयन्, श्लेषबन्धेन च कथाविशेषोपन्यासप्तौकुमार्येण च हरति रसिकानां चेतांसि । यथा च श्रेष्ठतमत्वमस्य सर्वैरप्युत्तरकालीनैः कविभिरङ्गीकृतं तथोदाहरामः—

(१) शब्दार्थयोः समो गुम्फः पाञ्चाली रीतिरिष्यते ।
शीलाभट्टारिकावाचि बाणोक्तिषु च सा यदि ॥ कस्यापि ।
(२) सहर्षचरितारब्धाद्भुतकादम्बरीकथा ।
बाणस्य वाण्यनार्येव स्वच्छन्दा भ्रमति क्षितौ ॥ राजशेखरस्य ।
(३) शश्वद्बाणद्वितीयेन नमदाकारधारिणा ।
धनुषेव गुणाढ्येन निःशेषो रञ्जितो जनः ॥ नलचम्प्वाम् ।
(४) युक्तं कादम्बरीं श्रुत्वा कवयो मौनमाश्रिताः ।
बाणध्वनावनध्यायो भवतीति स्मृतिर्यतः ॥ कीर्तिकौमुद्याम् ।
(५) जाता शिखण्डिनी प्राग्यथा शिखण्डी तथावगच्छामि ।
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति ॥ आर्यासप्तशत्याम् ।
(६) केवलोऽपि स्फुरन् बाणः करोति विमदान् कवीन् ।
किं पुनः क्लृप्तसंधानपुलिन्ध्रकृतसंनिधिः ॥ तिलकमञ्जर्याम् ।

(७) सुबन्धुर्बाणभट्टश्च कविराज इति त्रयः ।
वक्रोक्तिमार्गनिपुणाश्चतुर्थो विद्यते न वा ॥ राघवपाण्डवीये ।

(८) श्लेषे केचन शब्दगुम्फविषये केचिद्रसे चापरेऽ-
लंकारे कतिचित्सदर्थविषये चान्ये कथावर्णने ।
आः सर्वत्र गभीरधीरकविताविन्ध्याटवीचातुरी-
संचारी कविकुम्भिकुम्भभिदुरो बाणस्तु पञ्चाननः ॥ श्रीचन्द्रदेवस्य ।

(९) हृदि लग्नेन बाणेन यन्मन्दोऽपि पदक्रमः ।
भवेत्कविकुरङ्गाणां चापलं तत्र कारणम् ॥ त्रिलोचनस्य ।

(१०) मेण्ठे स्वर्द्विरदाधिरोहिणि वशं याते सुबन्धौ विधेः
शान्ते हन्त च भारवौ विघटिते बाणे विषादस्पृशः॥ श्रीकण्ठचरिते।

भट्टबाणस्य पुत्रोऽपि कविगुणेषु किंचिदेवोन इति भाति। यद्यपि भट्टबाणकृतिसंनिधौ तत्पुत्रस्य कृतिर्न पाञ्चालीं रीतिं पुष्णाति, नापि नवनवार्थघटनाचातुरीं विशदयति, तथापि स पितुरनुरूप एव पुत्र इत्यवश्यमङ्गीकर्तव्यं भवति ।

कादम्बरीरसभरेण समस्त एव मत्तो न किंचिदपि चेतयते जनोऽयम्
भीतोऽस्मि यन्न रसवर्णविवर्जितेन तच्छेषमात्मवचसाप्यनुसंदधानः ॥

इत्यत्र तु स स्वीयं वैगुण्यं यथार्थतयाविष्करोति, प्रदर्शयति च पितुर्ऋणं

बीजानि गर्भितफलानि विकासभाञ्जि वप्त्रेव यान्युचितकर्मबलात्कृतानि।
उत्कृष्टभूमिविततानि च यान्ति पोषं तान्येव तस्य तनयेन तु संहृतानि ॥

इत्यत्र । तदेवं कथांशे भट्टबाणस्यैव प्रायः कर्तृत्वं शब्दविशेषरचनायां तु तत्पुत्रस्येत्यपि मनसि निधेयं पाठकमहाभागैः ॥

वैद्यश्रीपरशुरामशर्मा ।

## पाठान्तरविषये संकेतचिह्नानि-

न=निर्णयसागरयन्त्रालये मुद्रितं सटीक पुस्तकम् ।
क=काळेमहाशयैः संपादितं पुस्तकम् ।
का=काणेमहाशयैः संपादितं पुस्तकम् ।
पी=पीटर्सनमहाशयैः संपादितं पुस्तकम् ।
भा=भानुचन्द्रकृता कादम्बरीव्याख्या ।
पा=पाठान्तरम् । यथा नपा-निर्णयसागरस्थपुस्तकस्थं पाठान्तरम्,
कपा-काळेमहाशयसंपादितपुस्तकस्थं पाठान्तरम्,
भापा-भानुचन्द्रटीकायां निर्दिष्टं पाठान्तरमिति ।

---

॥ श्रीः ॥

# कादम्बरी ।

रजोजुषे जन्मनि सत्त्ववृत्तये
स्थितौ प्रजानां प्रलये तमःस्पृशे ।
अजाय सर्गस्थितिनाशहेतवे
त्रयीमयाय त्रिगुणात्मने नमः ॥ १ ॥

जयन्ति बाणासुरमौलिलालिता
दशास्यचूडामणिचक्रचुम्बिनः ।
सुरासुराधीशशिखान्तशायिनो
भवच्छिदस्त्र्यम्बकपादपांशवः ॥ २ ॥

जयत्युपेन्द्रः स चकार दूरतो
बिभित्सया यः क्षणलब्ध[1]लक्ष्यया ।
दृशैव कोपारुणया रिपोरुरः
स्वयं भयाद्भिन्नमिवास्रपाटलम् ॥ ३ ॥

नमामि [2]भर्वोश्चरणाम्बुजद्वयं
सशेखरैर्मौखरिभिः कृतार्चनम् ।
समस्तसामन्तकिरीटवेदिका-
विटङ्कपीठोल्लुठितारुणाङ्गुलि ॥ ४ ॥

---

१. नपा-बद्ध°. २. न-भत्सोः; भापा-भर्त्सोः.

अकारणाविष्कृतवैरदारुणा-
दसज्जनात्कस्य भयं न जायते।
विषं महाहेरिव यस्य दुर्वचः
सुदुःसहं संनिहितं सदा मुखे ॥ ५ ॥

कटु क्वणन्तो मलदायकाः खला-
स्तुदन्त्यलं बन्धनशृङ्खला इव।
मनस्तु साधुध्वनिभिः पदे पदे
हरन्ति सन्तो मणिनूपुरा इव ॥ ६ ॥

सुभाषितं हारि विशत्यधो गला-
न्न दुर्जनस्यार्करिपोरिवामृतम्।
तदेव धत्ते हृदयेन सज्जनो
हरिर्महारत्नमिवातिनिर्मलम् ॥ ७ ॥

स्फुरत्कलालापविलासकोमला
करोति रागं हृदि कौतुकाधिकम्।
रसेन शय्यां स्वयमभ्युपागता
कथा जनस्याभिनवा वधूरिव ॥ ८ ॥

हरन्ति कं नोज्ज्वलदीपकोपमै-
र्नवैः पदार्थैरुपपादिताः कथाः।
निरन्तरश्लेषघनाः सुजातयो
महास्रजश्चम्पककुड्मलैरिव ॥ ९ ॥

बभूव वात्स्यायनवंशसंभवो
द्विजो जगद्गीतगुणोऽग्रणीः सताम् ।
अनेकगुप्तार्चितपादपङ्कजः
कुबेरनामांश इव स्वयंभुवः ॥ १० ॥

उवास यस्य श्रुतिशान्तकल्मषे
सदा पुरोडाशपवित्रिताधरे ।
सरस्वती सोमकषायितोदरे
समस्तशास्त्रस्मृतिबन्धुरे मुखे ॥ ११ ॥

जगुर्गृहे[1]ऽभ्यस्तसमस्तवाङ्मयैः
ससारिकैः पञ्जरवर्तिभिः शुकैः ।
निगृह्यमाणा बटवः पदे पदे
यजूंषि सामानि च यस्य शङ्किताः ॥ १२ ॥

हिरण्यगर्भो भुवनाण्डकादिव
क्षपाकरः क्षीरमहार्णवादिव ।
अभूत्सुपर्णो विनतोदरादिव
द्विजन्मनामर्थपतिः पतिस्ततः ॥ १३ ॥

विवृण्वतो यस्य विसारि वाङ्मयं
दिने दिने शिष्यगणा नवा नवाः ।
उषस्सु लग्नाः श्रवणेऽधिकां श्रियं
प्रचक्रिरे चन्दनपल्लवा इव ॥ १४ ॥

---

१. नपा—गृहे ग्रस्त°

विधानसंपादितदानशोभितैः
स्फुरन्महावीरसनाथमूर्तिभिः ।
मखैरसंख्यैरजयत्सुरालयं
सुखेन यो यूपकैर्गजैरिव ॥ १५ ॥

स चित्रभानुं तनयं महात्मनां
सुतोत्तमानां श्रुतिशास्त्रशालिनाम् ।
अवाप मध्ये स्फटिकोपलोपमं[1]
क्रमेण कैलासमिव क्षमाभृताम् ॥ १६ ॥

महात्मनो यस्य सुदूरनिर्गताः
कलङ्कमुक्तेन्दुकलामलत्विषः ।
द्विषन्मनः प्राविविशुः कृतान्तरा
गुणा नृसिंहस्य नखाङ्कुरा इव ॥ १७ ॥

दिशामलीकालकभङ्गतां गत-
स्त्रयीवधूकर्णतमालपल्लवः ।
चकार यस्याध्वरधूमसंचयो
मलीमसः शुक्लतरं निजं यशः ॥ १८ ॥

सरस्वतीपाणिसरोजसंपुट-
प्रमृष्टहोमश्रमसीकराम्भसः ।
यशोंशुशुक्लीकृतसप्तविष्टपा-
त्ततः सुतो बाण इति व्यजायत ॥ १९ ॥

---

१. नपा—स्फटिकोपलामलं.

द्विजेन तेनाक्षतकण्ठकौण्ठ्यया
महामनोमोहमलीमसान्धया ।
अलब्धवैदग्ध्यविलासमुग्धया
धिया निबद्धेयमतिद्वयी कथा ॥ २० ॥

१. आसीदशेषनरपतिशिरःसमभ्यर्चितशासनः पाकशासन इवापरः, चतुरुदधिमालामेखलाया भुवो भर्ता, प्रतापानुरागावनतसमस्तसामन्तचक्रः, चक्रवर्तिलक्षणोपेतः, चक्रधर इव करकमलोपलक्ष्यमाणशङ्खचक्रलाञ्छनः, हर इव जितमन्मथः, गुह इवाप्रतिहतशक्तिः, कमलयोनिरिव विमानीकृतराजहंसमण्डलः, जलधिरिव लक्ष्मीप्रसूतिः, गङ्गाप्रवाह इव भगीरथपथप्रवृत्तः, रविरिव प्रतिदिवसोपजायमानोदयः, मेरुरिव सकल[1]भुवनोपजीव्यमानपादच्छायः, दिग्गज इवानवरतप्रवृत्तदानार्द्रीकृतकरः, कर्ता महाश्चर्याणाम्, आहर्ता क्रतूनाम्, आदर्शः सर्वशास्त्राणाम्, उत्पत्तिः कलानाम्, कुलभवनं गुणानाम्, आगमः काव्यामृतरसानाम्, उदयशैलो मित्रमण्डलस्य, उत्पातकेतुरहितजनस्य, प्रवर्तयिता गोष्ठीबन्धानाम्, आश्रयो रसिकानाम्, प्रत्यादेशो धनुष्मताम्, धौरेयः साहसिकानाम्, अग्रणीर्विदग्धानाम्, वैनतेय इव विनतानन्दजननः, वैन्य इव चापकोटिसमुत्सारितसकलारातिकुलाचलो राजा शूद्रको नाम ।

२. नाम्नैव यो निर्भिन्नारातिहृदयो विरचितनारसिंहरूपाडम्बरमेकविक्रमाक्रान्तसकलभुवनतलो विक्रमत्रयायासितं[2] च जहासेव वासुदेवम् । अतिचिरकाललग्नमतिक्रान्तकुनृपतिसहस्रसंपर्ककलङ्कमिव क्षालयन्ती यस्य विमले[3] कृपाणधाराजले चिरमुवास राजलक्ष्मीः ।

---

१. न–सकलोपजीव्यमान° २. क––°यासितभुवनत्रयं; न–°यासितं भुवनत्रयं च हसति स्मेव. ३. न––विमले इति नास्ति.

यश्च मनसि धर्मेण, कोपे यमेन, प्रसादे धनदेन, प्रतापे वह्निना, भुजे भुवा, दृशि श्रिया, वाचि सरस्वत्या, मुखे शशिना, बले मरुता, प्रज्ञायां सुरगुरुणा, रूपे मनसिजेन, तेजसि सवित्रा च वसता सर्वदेवमयस्य प्रकटितविश्वरूपाकृतेरनुकरोति भगवतो नारायणस्य । यस्य च मदकलकरिकुम्भपीठपाटनमाचरतो[1] लग्नस्थूलमुक्ताफलेन दृढमुष्टिनिपीडनान्निष्ठ्यूतधाराजलबिन्दुदन्तुरेणेव कृपाणेनाकृष्यमाणा सुभटोरःकपाटविघटितकवचसहस्रान्धकारमध्यवर्तिनी करिकरटतटगलितमदजलासारदुर्दिनास्वभिसारिकेव समरनिशासु समीपमसकृदाजगाम[2] राजलक्ष्मीः । यस्य च हृदयस्थितानपि पतीन्दिधक्षुरिव प्रतापानलो वियोगिनीनामपि रिपुसुन्दरीणामन्तर्जनितदाहो दिवानिशं जज्वाल । यस्मिंश्च राजनि जितजगति परिपालयति महीं चित्रकर्मसु वर्णसंकराः, रतेषु केशग्रहाः, काव्येषु दृढबन्धाः, शास्त्रेषु चिन्ता, स्वप्नेषु विप्रलम्भाः, छत्त्रेषु कनकदण्डाः, ध्वजेषु प्रकम्पाः, गीतेषु रागविलसितानि, करिषु मदविकाराः, चापेषु गुणच्छेदाः, गवाक्षेषु जालमार्गाः, शशिकृपाणकवचेषु कलङ्काः, रतिकलहेषु दूतसंप्रेषणानि,[3] शार्यक्षेषु शून्यगृहाः प्रजानामासन् । यस्य च परलोकाद्भयमन्तःपुरिकालकेषु[4] भङ्गो नूपुरेषु मुखरता विवाहेषु करग्रहणमनवरतमखाग्निधूमेनाश्रुपातस्तुरंगेषु कशाभिघातो मकरध्वजे चापध्वनिरभूत् ।

३. तस्य च राज्ञः कलिकालभयपुञ्जीभूतकृतयुगानुकारिणी त्रिभुवनप्रसवभूमिरिव विस्तीर्णा मज्जन्मालवविलासिनीकुचतटास्फालनजर्जरितोर्मिमालया जलावगाहनायातजयकुञ्जरकुम्भसिन्दूरसंध्यायमानसलिलयोन्मदकलहंसकुलकोलाहलमुखरितकूलया वेत्रवत्या सरिता परिगता विदिशाभिधाना नगरी राजधान्यासीत् ।

---

१. न—पारन् विदधतः. २. न—समीपं सकृदगात्. ३. न—दूतप्रेषणानि. ४. कपा—°पुरिकाकुन्तलेषु.

४. स तस्यामवजिताशेषभुवनमण्डलतया विगतराज्यचिन्ताभारनिर्वृतो द्वीपान्तरागतानेकभूमिपालमौलिमालालालितचरणयुगलो वलयमिव लीलया भुजेन भुवनभारमुद्वहन्, अमरगुरुमपि प्रज्ञयोपहसद्भिरनेककुलक्रमागतैरसकृदालोचितनीतिशास्त्रनिर्मलमनोभिरलुब्धैः स्निग्धैः प्रबुद्धैश्चामात्यैः परिवृतः,समानवयोविद्यालंकारैरनेकमूर्धाभिषिक्तपार्थिवकुलोद्भूतैरखिलकलाकलापालोचनकठोरमतिभिरतिप्रगल्भैः कालविद्भिः प्रभावानुरक्तहृदयैरग्राम्यपरिहासकुशलैरिङ्गिताकारवेदिभिः[1] काव्यनाटकाख्यानकाख्यायिकालेख्यव्याख्यानादिक्रियानिपुणैरतिकठिनपीवरस्कन्धोरुबाहुभिरसकृदवदलितसमदरिपुगजघटापीठबन्धैः केसरिकिशोरकैरिव विक्रमैकरसैरपि विनयव्यवहारिभिरात्मनः प्रतिबिम्बैरिव राजपुत्रैः सह रममाणः प्रथमे वयसि सुखमतिचिरमुवास । तस्य चातिविजिगीषुतया महासत्त्वतया च तृणमिव लघुवृत्ति स्त्रैणमाकलयतः प्रथमे वयसि वर्तमानस्यापि रूपवतोपि संतानार्थिभिरमात्यैरपेक्षितस्यापि सुरतसुखस्योपरि द्वेष इवासीत् । सत्यपि रूपविलासोपहसितरतिविभ्रमे लावण्यवति विनयवत्यन्वयवति हृदयहारिणि चावरोधजने स कदाचिदनवरतदोलायमानरत्नवलयो घर्घरिकास्फालनप्रकम्पझणझणायमानमणिकर्णपूरः स्वयमारब्धमृदङ्गवाद्यः संगीतकप्रसङ्गेन, कदाचिदाविरलविमुक्तशरासारशून्यीकृतकाननो मृगयाव्यापारेण, कदाचिदाबद्धविदग्धमण्डलः काव्यप्रबन्धरचनेन, कदाचिच्छास्त्रालापेन, कदाचिदाख्यानकाख्यायिकेतिहासपुराणाकर्णनेन, कदाचिदालेख्यविनोदेन, कदाचिद्वीणया, कदाचिद्दर्शनागतमुनिजनचरणशुश्रूषया, कदाचिदक्षरच्युतकमात्राच्युतकबिन्दुमतीगूढचतुर्थपादप्रहेलिकाप्रदानादिभिर्वनितासंभोगसुखपराङ्मुखः सुहृत्परिवृतो दिवसम-

---

१. न–अग्राम्योपहास.°

नयत्। यथैव च दिवसमेवमारब्धविविधक्रीडापरिहासचतुरैः[1] सुहृद्भिरुपेतो निशामनैषीत्।

५. एकदा तु नातिदूरोदिते नवनलिनदलसंपुटभिदि किंचिदुन्मुक्तपाटलिम्नि भगवति सहस्रमरीचिमालिनि राजानमास्थानमण्डपगतमङ्गनाजनविरुद्धेन वामपार्श्वावलम्बिना कौक्षेयकेण संनिहितविषधरेव चन्दनलता भीषणरमणीयाकृतिः, अविरलचन्दनानुलेपनधवलितस्तनतटोन्मज्जदैरावतकुम्भमण्डलेव मन्दाकिनी, चूडामणिप्रतिबिम्बच्छलेन राजाज्ञेव मूर्तिमती राजभिः शिरोभिरुह्यमाना, शरदिव कलहंसधवलाम्बरा, जामदग्न्यपरशुधारेव वशीकृतसकलराजमण्डला, विन्ध्यवनभूमिरिव वेत्रलतावती, राज्याधिदेवतेव विग्रहिणी प्रतीहारी समुपसृत्य क्षितितलनिहितजानुकरकमला सविनयमब्रवीत्। "देव द्वारस्थिता सुरलोकमारोहतस्त्रिशङ्कोरिव कुपितशतमखहुंकारनिपातिता राजलक्ष्मीर्दक्षिणापथादागता चाण्डालकन्यका पञ्जरस्थं शुकमादाय देवं विज्ञापयति। सकलभुवनतले[2] सर्वरत्नानामुदधिरिवैकभाजनं देवो विहंगमश्चायमाश्चर्यभूतो निखिलभुवनतलरत्नमिति कृत्वा देवपादमूलमादायागताहमिच्छामि देवदर्शनसुखमनुभवितुमिति। एतदाकर्ण्य देवः प्रमाणम्।" इत्युक्त्वा विरराम। उपजातकुतूहलस्तु राजा समीपवर्तिनां राज्ञामालोक्य मुखानि "को दोषः, प्रवेश्यताम्" इत्यादिदेश।

६. अथ प्रतीहारी नरपतिवचनानन्तरमुत्थाय तां मातङ्गकुमारीं प्रावेशयत्। प्रविश्य च सा नरपतिसहस्रमध्यवर्तिनमशनिभयपुञ्जितकुलशैलमध्यगतमिव कनकशिखरिणम्, अनेकरत्नाभरणकिरणजालकान्तरितावयवमिन्द्रायुधसहस्रसंछादिताष्टदिग्भागमिव जलधरसमयदि-

---

१. कपी-चतुर°. २. न-°तलरत्नानां.

वसम्, अवलम्बितस्थूलमुक्ताकलापस्य कनकशृङ्खलानियमितमणिदण्डिकाचतुष्टयस्य गगनासिन्धुफेनपटलपाण्डुरस्य नातिमहतो दुकूलवितानस्याधस्तादिन्दुकान्तमणिपर्यङ्किकानिषण्णम्, उद्धूयमानकनकदण्डचामरकलापम्, उन्मयूखमुखकान्तिविजयपराभवप्रगते शशिनीव स्फटिकपादपीठे विन्यस्तवामपादम्, इन्द्रनीलमणिकुट्टिमप्रभासंपर्कश्यामायमानैः प्रणतरिपुनिश्वासमलिनीकृतैरिव चरणनखमयूखजालैरुपशोभमानम्, आसनोल्लसितपद्मरागकिरणपाटलीकृतेनाचिरमृदितमधुकैटभरुधिरारुणेन हरिमिवोरुयुगलेन विराजमानम्, अमृतफेनधवले गोरोचनालिखितहंसमिथुनसनाथपर्यन्ते चारुचामरपवनप्रनर्तितदशे दुकूले वसानम्, अतिसुरभिचन्दनानुलेपनधवलितोरःस्थलमुपरिविन्यस्तकुङ्कुमस्थासकमन्तरान्तरानिपतितबालातपच्छेदमिव कैलासशिखरिणम्, अपरशशिशङ्कया नक्षत्रमालयेव हारलतया कृतमुखपरिवेषम् अतिचपलराजलक्ष्मी[1]बन्धनिगडकटकशङ्कामुपजनयतेन्द्रनीलकेयूरयुगलेन मलयजरसगन्धलुब्धेन भुजंगद्वयेनेव वेष्टितबाहुशिखरम्[2], ईषदालम्बिकर्णोत्पलम्, उन्नतघोणम्, उत्फुल्लपुण्डरीकलोचनम्, अमलकलधौतपट्टायतमष्टमीचन्द्रशकलाकारमशेषभुवनराज्याभिषेकसलिलपूतमूर्णासनाथं ललाटदेशमुद्वहन्तम्, आमोदिमालतीकुसुमशेखरमुषासि शिखरपर्यस्ततारकापुञ्जमिव पश्चिमाचलम्, आभरणप्रभापिशङ्गिताङ्गतया लग्नहरहुताशमिव मकरध्वजम्, आसन्नवर्तिनीभिः सर्वतः सेवार्थमागताभिरिव दिग्वधूभिर्वारविलासिनीभिः परिवृतम्, अमलमणिकुट्टिमसंक्रान्तसकलदेहप्रतिबिम्बतया पतिप्रेम्णा वसुंधरया हृदयेनेवोह्यमानम्, अशेषजनभोग्यतामुपनीतयाप्यसाधारणया राजलक्ष्म्या समालिङ्गितदेहम्, अपरिमितपरिवारजनमप्यद्वितीयम्, अनन्तगजतुरगसाधनमपि खड्गमात्रसहायम्, एकदेशस्थितमपि

---

१. न—राज्यलक्ष्मी　२. न—बाहुयुगलम्.

व्याप्तभुवनमण्डलम्, आसनगतमपि धनुषि निषण्णम्, उत्सादिताशेषद्विषदिन्धनमपि ज्वलत्प्रतापानलम्, आयतलोचनमपि सूक्ष्मदर्शनम्, महादोषमपि सकलगुणाधिष्ठानम्, कुपतिमपि कलत्रवल्लभम्, अविरतप्रवृत्तदानमप्यमदम्, अतिशुद्धस्वभावमपि कृष्णचरितम्, अकरमपि हस्तस्थितसकलभुवनतलं राजानमद्राक्षीत्।

७. आलोक्य च सा दूरस्थितैव प्रचलितरत्नवलयेन रक्तकुवलयदलकोमलेन पाणिना जर्जरितमुखभागां वेणुलतामादाय नरपतिप्रबोधनार्थमसकृत्सभाकुट्टिममाजघान। येन सकलमेव तद्राजकमेकपदे वनकरियूथमिव तालशब्देन तेन वेणुलताध्वनिना युगपदावलितवदनमवनिपालमुखादाकृष्य चक्षुस्तदभिमुखमासीत्।

८. अवनिपतिस्तु दूरादालोकयेत्यभिधाय प्रतीहार्या निर्दिश्यमानां तां वयःपरिणामपाण्डुराशिरसा रक्तराजीवेक्षणापाङ्गेनानवरतकृतव्यायामतया यौवनापगमेप्यशिथिलशरीरसंधिना सत्यपि मातङ्गत्वे नातिनृशंसाकृतिनानुगृहीतार्यवेषेण धवलवाससा पुरुषेणाधिष्ठितपुरोभागाम्, आकुलाकुलकाकपक्षधारिणा कनकशलाकानिर्मितमप्यन्तर्गतशुकप्रभाश्यामायमानं मरकतमयमिव पञ्जरमुद्वहता चाण्डालदारकेणानुगम्यमानाम्, असुरगृहीतामृतापहरणकृतकपटपटुविलासिनीवेषस्य श्यामतया भगवतो हरेरिवानुकुर्वतीम्, संचारिणीमिवेन्द्रनीलमणिपुत्रिकाम्, आगुल्फावलम्बिना नीलकञ्चुकेनावच्छन्नशरीरामुपरि रक्तांशुकरचितावगुण्ठनां नीलोत्पलस्थलीमिव निपतितसंध्यातपाम्, एककर्णावसक्तदन्तपत्रप्रभाधवलितकपोलमण्डलामुद्यदिन्दुकिरणच्छुरितमुखीमिव विभावरीम्, आकपिलगोरोचनारचिततिलकतृतीयलोचनामीशानरचितानुरचितकिरातवेषामिव भवानीम्, उरःस्थलनिवाससंक्रान्त-

---

१. न—आसने स्थितमपि. २. न—प्रतिबोधनार्थम्, ३. क—सकृत्. ४. न—°वलम्बिनील°

नारायणदेहप्रभाश्यामलितामिव श्रियम्, कुपितहरहुताशनदह्यमानमदन-
धूममलिनीकृतामिव रतिम्, उन्मदहलिहला[1]पकर्षणभयप्रपलायितामिव
यमुनाम्, अतिबहलपिण्डालक्तकरसरागपल्लवितपादपङ्कजामचिरमृदित-
महिषासुररुधिररक्तचरणामिव कात्यायनीम्, आलोहिताङ्गुलिप्रभापाट-
लितनखमयूखामतिकठिनमणिकुट्टिमस्पर्शमसहमानां क्षितितले पल्लव-
भङ्गानिव निधाय संचरन्तीम्, आपिञ्जरेणोत्सर्पिणा नूपुरमणीनां प्रभा-
जालेन रञ्जितशरीरतया पावकेनेव भगवता रूप एव पक्षपातिना
प्रजापतिमप्रमाणीकुर्वता जातिसंशोधनार्थमालिङ्गितदेहाम्, अनङ्गवारण-
शिरोनक्षत्रमालायमानेन रोमराजिलतालवालकेन मेखलादाम्ना परि-
गतजघनस्थलाम्, अतिस्थूलमुक्ताफलघटितेन शुचिना हारेण गङ्गा-
स्रोतसेव कालिन्दीशङ्कया कृतकण्ठग्रहाम्, शरदमिव विकसितपुण्ड-
रीकलोचनाम्, प्रावृषमिव घनकेशजालाम्, मलयमेखलामिव चन्दन-
पल्लवावतंसाम्, नक्षत्रमालामिव चित्रश्रवणाभरणभूषिताम्, श्रियमिव
हस्तस्थितकमलशोभाम्, मूर्छामिव मनोहारिणीम्, अरण्यभू[2]मिमिवा[1]क्षत-
रूपसंपन्नाम्, दिव्ययोषितमिवाकुलीनाम्, निद्रामिव लोचनग्राहिणीम्,
अरण्यकमलिनीमिव मातङ्गकुलदूषिताम्, अमूर्तामिव स्पर्शवर्जिताम्
आलेख्यगतामिव दर्शनमात्रफलाम्, मधुमासकुसुमसमृ[3]द्धिमिव विजातिम्,
अनङ्गकुसुमचापलेखामिव मुष्टिग्राह्यमध्याम्, यक्षाधिपलक्ष्मीमिवालकोद्भा-
सिनीम्, अचिरोपरूढयौवनाम्, अतिशयरूपाकृतिम[4]निमेषलोचनो ददर्श।

९. समुपजातविस्मयस्य चाभून्मनसि महीपतेः। "अहो विधातुरस्थाने
रूप[5]निष्पादनप्रयत्नः। तथाहि। यदि नामेयमात्मरूपोपहसिताशेषरूपसंप-
दुत्पादिता किमर्थमपगतस्पर्शसंभोगसुखे कृतं कुले जन्म। मन्ये च मा-
तङ्गजातिस्पर्शदोषभयाद[6]स्पृशतेयमुत्पादिता प्रजापतिना। अन्यथा कथ-

१. न–°हलाकर्षण°. २. न–भूमिमिव रूप°. ३. न–समृद्धिमिवाजातिम्.
४. न–अनिमिष°. ५. न–सौन्दर्य°. ६. न–अस्पृश्यतेय°.

मियमक्लिष्टता लावण्यस्य। न हि करतलस्पर्शक्लेशितानामवयवानामीदृशी भवति कान्तिः। सर्वथा धिग्विधातारमसदृशसंयोगकारिणमतिमनोहराकृतिरपि क्रूरजातितया येनेयमसुरश्रीरिव सततनिन्दितसुरता रमणीयाप्युद्वेजयति।" इत्येवमादि चिन्तयन्तमेव राजानमीषदवगलितकर्णपल्लवावतंसा प्रगल्भवनितेव कन्यका प्रणनाम। कृतप्रणामायां च तस्यां मणिकुट्टिमोपविष्टायां स पुरुषस्तं विहंगमादाय पञ्जरगतमेव किंचिदुपसृत्य राज्ञे न्यवेदयदब्रवीच्च। "देव, विदितसकलशास्त्रार्थो राजनीतिप्रयोगकुशलः पुराणेतिहासकथालापनिपुणो वेदिता गीतश्रुतीनां काव्यनाटकाख्यायिकाख्यानकप्रभृतीनामपरिमितानां सुभाषितानामध्येता स्वयं च कर्ता परिहासालापपेशलो वीणावेणुमुरजप्रभृतीनां वाद्यविशेषाणामसमः श्रोता नृत्तप्रयोगदर्शननिपुणश्चित्रकर्मणि प्रवीणो द्यूतव्यापारे प्रगल्भः प्रणयकलहकुपितकामिनीप्रसादनोपायचतुरो गजतुरगपुरुषस्त्रीलक्षणाभिज्ञः सकलभूतलरत्नभूतोयं वैशम्पायनो नाम शुकः सर्वरत्नानां चोदधिरिव देवो भाजनमिति कृत्वैनमादायास्मत्स्वामिदुहिता देवपादमूलमायाता। तदयमात्मीयः क्रियताम्।" इत्युक्त्वा नरपतेः पुरो निधाय पञ्जरमसावपससार।

१०. अपसृते च तस्मिन्स विहंगराजो राजाभिमुखो भूत्वा समुन्नमय्य दक्षिणं चरणमतिस्पष्टवर्णस्वरसंस्कारया गिरा कृतजयशब्दो राजानमुद्दिश्यार्यामिमां पपाठ।

स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम्॥

११. राजा तु तां श्रुत्वा संजातविस्मयः सहर्षमासन्नवर्तिनमतिमहार्हहेमासनोपविष्टममरगुरुमिवाशेषनीतिशास्त्रपारगमतिवयसमग्रजन्मानमखि-

---

१. न-तामार्यां.

लमन्त्रिमण्डले प्रधानममात्यं कुमारपालितनामानमब्रवीत् । "श्रुता भवद्भिरस्य विहंगमस्य स्पष्टता वर्णोच्चारणे स्वरे च मधुरता । प्रथमं तावदिदमेव महदाश्चर्यमसंकीर्णवर्णप्रविभागामभिव्यक्तमात्रानुस्वार-संस्कारयोगां विशेषसंयुक्तां यदयमतिपरिस्फुटाक्षरां गिरमुदीरयति । तत्र पुनरमभिमतविषये तिरश्चोपि मनुजस्येव संस्कारवतो बुद्धि-पूर्वा प्रवृत्तिः । तथा हि । अनेन समुत्क्षिप्तदक्षिणचरणेनोच्चार्य जय-शब्दमियमार्या मामुद्दिश्यातिस्फुटाक्षरं गीता । प्रायेण हि पक्षिणः पशवश्च भयाहारमैथुननिद्रासंज्ञामात्रवेदिनो भवन्ति । इदं तु मह-च्चित्रम् । " इत्युक्तवति भूभुजि कुमारपालितः किंचित्स्मितवदनो नृप-मवादीत् । "देव किमत्र चित्रम् । एते हि शुकसारिकाप्रभृतयो विहंगम-विशेषा यथाश्रुतां वाचमुच्चारयन्तीत्यधिगतमेव देवेन । तत्राप्यन्य-जन्मोपात्तसंस्कारानुबन्धेन वा पुरुषप्रयत्नेन वा संस्कारातिशय उप-जायत इति नातिचित्रम् । अन्यदेतेषामपि पुरा पुरुषाणामिवातिपरि-स्फुटाभिधाना वागासीत् । अग्निशापात्त्वपरिस्फुटालापता शुका-नामुपजाता करिणां च जिह्वापरिवृत्तिः " । इत्येवमुच्चारयत्येव तस्मिन्नशिशिरकिरणमम्बरतलस्य मध्यमारूढमावेदयन्नाडिकाच्छेद-प्रहतपटुपटहनादानुसारी मध्याह्नशङ्खध्वनिरुदतिष्ठत् । तमाकर्ण्य च समासन्नस्नानसमयो विसर्जितराजलोकः क्षितिपतिरास्थानमण्डपा-दुत्तस्थौ ।

१२. अथ चलति महीपतावन्योन्यमतिरभससंचलनचालिताङ्गद-पत्रभङ्गमकरकोटिपाटितांशुकपटानामाक्षेपदोलायमानकण्ठदाम्नामंस-स्थलोल्लसितकुङ्कुमपटवासधूलिपिञ्जरितादिशामालोलमालतीकुसुमशेखरो-त्पतदलिकदम्बकानामर्धावलम्बिभिः कर्णोत्पलैश्चुम्ब्यमानगण्डस्थलानां

---

१. न– आश्चर्यं यदयमसंकीर्ण°.

गमनप्रणामलालसानामहमहमिकया वक्षःस्थलप्रेङ्खोलितहारलतानामुत्तिष्ठतामासीदतिमहान्संभ्रमो महीपतीनाम्। इतश्चेतश्च निष्पतन्तीनां स्कन्धदेशावसक्तचामराणां चामरग्राहिणीनां कमलमधुपानमत्तजरत्कलहंसनादजर्जरेण पदे पदे रणितमणीनां मणिनूपुराणां निनादेन, वारविलासिनीजनस्य संचरतो जघनस्थलास्फालनरसितरत्नमालिकानां मेखलानां[1] मनोहारिणा झंकारेण, नूपुररवाकृष्टानां च धवलितास्थानमण्डपसोपानफलकानां भवनदीर्घिकाकलहंसकानां कोलाहलेन, रसनारसितोत्सुकितानां च तारतरविराविणामुल्लिख्यमानकांस्यक्रेंकारदीर्घेण गृहसारसानां कूजितेन, सरभसप्रचलितसामन्तशतचरणतलाभिहतस्य चास्थानमण्डपस्य निर्घात[2]निर्घोषगम्भीरेण कम्पयतेव वसुमतीं ध्वनिना, प्रतीहारिणां च पुरः ससंभ्रमं समुत्सारितजनानां दण्डिनां समारब्धहेलमुच्चैरुच्चारयतामालोकयतालोकयतेति तारतरदीर्घेण भवनप्रासादकुञ्जेषूच्चरितप्रतिशब्दतया दीर्घतरतामुपगतेनालोकशब्देन[3], राज्ञां च ससंभ्रमावर्जितमौलिलोलचूडामणीनां प्रणमताममलमणिशलाकादन्तुराभिः किरीटकोटिभिरुल्लिख्यमानस्य मणिकुट्टिमस्य स्वनेन, प्रणामपर्यस्तानामतिकठिनमणिकुट्टिमनिपतितरणरणायितानां च मणिकर्णपूराणां निनादेन, मङ्गलपाठकानां च पुरोयायिनां जय जीवेति मधुरवचनानुयातेन पठतां दिगन्तव्यापिना कलकलेन, प्रचलितजनचरणशतसंक्षोभ[4]भयादपहाय कुसुमप्रकरमुत्पततां च मधुलिहां हुंकृतेन, संक्षोभादतित्वरितपदप्रवृत्तैरवनिपातिभिः केयूरकोटिताडितानां क्वणितमुखररत्नदाम्नां च मणिस्तम्भानां रणितेन सर्वतः क्षुभितामिव तदास्थानभवनमभवत्।

१३. अथ विसर्जितराजलोको विश्रम्यतामिति स्वयमेवाभिदाय तां

---

१. न-मणिमेखलानाम्. २. न-निर्घात इति नास्ति. ३. नपी-दीर्घतामुपगतेन. ४. न-संक्षोभाद्विहाय.

चाण्डालकन्यकां वैशम्पायनः प्रवेश्यतामभ्यन्तरमिति ताम्बूलकरङ्कवाहिनीमादिश्य कतिपयाप्तराजपुत्रपरिवृतो नरपतिरभ्यन्तरं प्राविशत्। [१]अपनीताशेषभूषणश्च दिवसकर इव विगलितकिरणजालश्चन्द्रतारकासमूहशून्य इव गगनाभोगः समुपाहृतसमुचितव्यायामोपकरणां व्यायामभूमिमयासीत्। स तस्यां च समानवयोभिः सह राजपुत्रैः कृतमधुरव्यायामः श्रमवशादुन्मिषन्तीभिः कपोलयोरीषद्दलितसिन्धुवारकुसुममञ्जरीविभ्रमाभिरुरसि निर्दयश्रमाच्छिन्नहारविगलितमुक्ताफलप्रकरानुकारिणीभिर्ललाटपट्टकेऽष्टमीचन्द्रशकलतलोल्लसदमृतबिन्दुविडम्बिनीभिः स्वेदजलकणिकासंततिभिरलंक्रियमाणमूर्तिरितस्ततः स्नानोपकरणसंपादनसत्वरेण पुरः प्रधावता परिजनेन तत्कालं विरलजनेपि राजकुले समुत्सारणाधिकारमुचितमाचरद्भिर्दण्डिभिरुपदिश्यमानमार्गो विततसितवितानामनेकचारणगणा[२]वबध्यमानमण्डलां गन्धोदकपूर्णकनकमयजलद्रोणीसनाथमध्यामुपस्थापितस्फाटिकस्नानपीठामेकान्तनिहितैरतिसुरभिगन्धसलिलपूर्णैः परिमलावकृष्टमधुकरकुलान्धकारितमुखैरातपभयान्नीलकर्पटावगुण्ठितमुखैरिव स्नानकलशैरुपशोभितां स्नानभूमिमगच्छत्। अवतीर्णस्य जलद्रोणीं वारविलासिनीकरमृदितसुगन्धामलकोपलिप्तशिरसो राज्ञः सम[३]न्तात्समुपतस्थुरंशुकनिबिडनिबद्धस्तनपरिकरा दूरसमुत्सारितवलयबाहुलताः समुत्क्षिप्तकर्णाभरणाः कर्णोत्सङ्गोत्सारितालका गृहीतजलकलशाः स्नानार्थमभिषेकदेवता इव वारयोषितः। ताभिश्च समुन्नतकुचकुम्भमण्डलाभिर्वारिमध्यप्रविष्टः करिणीभिरिव वनकरी परिवृतस्तत्क्षणं राजा रराज। जलद्रोणीसलिलादुत्थाय च स्नानपीठममलस्फाटिकधवलं वरुण इव राजहंसमा-

---

१. न-अपनीताभरणश्च. २. न- °गणानिबध्यमान° ३. न-परितः

रुरोह । ततस्ताः काश्चिन्मरकतकलशप्रभाश्यामायमाना नलिन्य इव मूर्तिमत्यः पत्रपुटैः, काश्चिद्रजतकलशहस्ता रजन्य इव पूर्णचन्द्रमण्डलविनिर्गतेन जोत्स्नाप्रवाहेण, काश्चित्कलशोत्क्षेपश्रमस्वेदार्द्रशरीरा जलदेवता इव स्फाटिकैः कलशैस्तीर्थजलेन, काश्चिन्मलयसरित इव चन्दनरसमिश्रेण सलिलेन, काश्चिदुत्क्षिप्तकलशपार्श्वविन्यस्तहस्तपल्लवाः प्रकीर्यमाणनखमयूखजालकाः प्रत्यङ्गुलिविवरविनिर्गतजलधाराः सलिलयन्त्रदेवता इव, काश्चिज्जाड्यमपनेतुमाक्षिप्तबालातपेनेव दिवसश्रिय इव, कनककलशहस्ताः कुङ्कुमजलेन वाराङ्गनाः क्रमेण[1] राजानमभिषिषिचुः। अनन्तरमुदपादि च स्फोटयन्निव श्रुतिपथमनेकप्रहतपटुपटहझल्लरीमृदङ्गवेणुवीणागीतनिनादानुगम्यमानो बन्दिवृन्दकोलाहलाकुलो भुवनविवरव्यापी स्नानशङ्खानामापूर्यमाणानामतिमुखरो ध्वनिः।

१४. एवं च क्रमेण निर्वर्तिताभिषेको विषधरनिर्मोकपरिलघुनी धवले परिधाय धौतवाससी शरदम्बरैकदेश इव जलक्षालनाविमलतनुरतिधवलजलधरच्छेदशुचिना दुकूलपटपल्लवेन तुहिनगिरिरिव गगनसरित्स्रोतसा कृतशिरोवेष्टनः संपादितपितृजलक्रियो मन्त्रपूतेन तोयाञ्जलिना दिवसकरमभिप्रणम्य देवगृहमगमत्। उपरचितपशुपतिपूजनश्च निष्क्रम्य देवगृहान्निर्वर्तिताग्निकार्यो विलेपनभूमौ झंकारिभिरलिकदम्बकैरनुबध्यमानपरिमलेन मृगमदकर्पूरकुङ्कुमवाससुरभिणा चन्दनेनानुलिप्तसर्वाङ्गो विरचितामोदिमालतीकुसुमशेखरः कृताम्बरपरिवर्तो रत्नकर्णपूरमात्राभरणः समुचितभोजनैः सह भूपतिभिराहारमभिमतरसास्वादजातप्रीतिरवनिपो निर्वर्तयामास।

१५. परिपीत[2]धूमवर्तिरुपस्पृश्य च गृहीतताम्बूलस्तस्मात्प्रमृष्टमणि-

---

१. **न**–यथायथम्. २. **कापी**–परिपीतधूपधूम°.

कुट्टिमात्प्रदेशादुत्थाय नातिदूरवर्तिन्या ससंभ्रमप्रधावितया प्रतीहार्या प्रसारितबाहुमवलम्ब्यानवरतवेत्रलताग्रहणप्रसङ्गातिजरठकिसलयानुकारिकरतलकरेणाभ्यन्तरसंचारसमुचितेन परिजनेनानुगम्यमानो धवलांशुकजवनिकापरिगतपर्यन्ततया स्फटिकमणिमयभित्तिबद्धमिवोपलक्ष्यमाणमतिसुरभिणा मृगनाभिपरिगतेनामोदिना चन्दनवारिणा सिक्तशिशिरमणिभूमिमविरलविप्रकीर्णेन विमलमणिकुट्टिमगगनतलतारागणेनेव कुसुमोपहारेण निरन्तरनिचितमुत्कीर्णशालभञ्जिकानिवहेन संनिहितगृहदेवतेनेव गन्धसलिलक्षालितेन कलधौतमयेन स्तम्भसंचयेन विराजमानमतिबहलागुरुधूपपरिमलमखिलविगलितजलनिवहधवलजलधरशकलानुकारिणा कुसुमामोदवासितप्रच्छदपटेन पट्टोपधानाध्यासितशिरोधाम्ना मणिमयप्रतिपादुकाप्रतिष्ठितपादेन पार्श्वस्थरत्नपादपीठेन तुहिनगिरिशिलातलसदृशशयनेन सनाथीकृतवेदिकं भुक्त्वास्थानमण्डपमयासीत् । तत्र च शयनतलनिषण्णः क्षितितलोपविष्टया शनैः शनैरुत्सङ्गनिहितासिलतया खड्गवाहिन्या नवनलिनदलकोमलेन करसंपुटेन संवाह्यमानचरणस्तत्कालोचितदर्शनैरवनिपातिभिरमात्यैर्मित्रैश्च सह तास्ताः कथाः कुर्वन्मुहूर्तमिवासांचक्रे । ततो नातिदूरवर्तिनीमन्तःपुराद्वैशम्पायनमादायागच्छेति समुपजाततद्वृत्तान्तप्रश्नकुतूहलो राजा प्रतीहारीमादिदेश । सा क्षितितलनिहितजानुकरतला "यथाज्ञापयति देवः" इति शिरसि कृत्वाज्ञां यथादिष्टमकरोत् ।

१६. अथ मुहूर्तादिव वैशम्पायनः प्रतीहार्या गृहीतपञ्जरः कनकवेत्रलतावलम्बिना किंचिदवनतपूर्वकायेन सितकञ्चुकावच्छन्नवपुषा जराधवलितमौलिना गद्गदस्वरेण मन्दमन्दसंचारिणा विहंगजातिप्रीत्या जरत्कलहंसेनेव कञ्चुकिनानुगम्यमानो राजान्तिकमाजगाम । क्षितितल-

१. का—प्रसारितमवलम्ब्य. २. का—करतलं करेण.

निहितकरतलस्तु कञ्चुकी राजानं व्यज्ञापयत्। "देव, देव्यो विज्ञापयन्ति। देवादेशादेष वैशम्पायनः स्नातः कृताहारश्च देवपादमूलं प्रतीहार्यानीतः"। इत्यभिधाय गते च तस्मिन्राजा वैशम्पायनमपृच्छत्। "कच्चिदभिमतमास्वादितमभ्यन्तरे भवता किंचिदशनजातमिति।" स प्रत्युवाच। "देव किं वा नास्वादितम्। आमत्तकोकिललोचनच्छविर्नीलपाटलः कषायमधुरः प्रकाममापीतो जम्बूफलरसः। हरिनखरभिन्नमत्तमातङ्गकुम्भमुक्तरक्तार्द्रमुक्ताफलत्विंषि खण्डितानि दाडिमबीजानि। नलिनीदलहरिन्ति द्राक्षाफलस्वादूनि च [1]दलितानि स्वेच्छया प्राचीनामलकीफलानि। किं वा प्रलपितेन बहुना। सर्वमेव देवीभिः स्वयं करतलोपनीयमानममृतायते।" इत्येवंवादिनो वचनमाक्षिप्य नरपतिरब्रवीत्। "आस्तां [2]तावत्सर्वमेवेदम्। अपनयतु नः कुतुहलम्। आवेदयतु भवानादितः प्रभृति कात्स्न्येंनात्मनो जन्म। कस्मिन्देशे भवान्कथं जातः। केन वा नाम कृतम्। का माता। कस्ते पिता। कथं वेदानामागमः। कथं शास्त्राणां परिचयः। कुतः कलाः समासादिताः। किं [3]जन्मान्तरानुस्मरणमुत वरप्रदानम्। अथवा विहंगवेषधारी कश्चिच्छन्नं निवससि। क्व वा पूर्वमुषितम्। कियद्वा वयः। कथं पञ्जरबन्धः। कथं चाण्डालहस्तगमनम्। इह वा कथमागमनमिति"। वैशम्पायनस्तु स्वयमुपजातकुतूहलेन सबहुमानमवनिपतिना पृष्टो मुहूर्तमिव ध्यात्वा सादरमब्रवीत्। देव, महतीयं कथा। यदि कौतुकमाकर्ण्यताम्।

---

१. न—चूर्णितानि. २. न—तावत्सर्वम्। अपनयतु. ३. न—किंहेतुकं.

१७. अस्ति पूर्वापरजलनिधिवेलावनलग्ना, मध्यदेशालंकारभूता मेखलेव भुवः, वनकरिकुलमदजलसेकसंवर्धितैरतिविकचधवलकुसुमनिकरमत्युन्नतया तारागणमिव शिखरदेशलग्नमुद्वहद्भिः पादपैरुपशोभिता, मदकलकुररकुलदश्यमानमरिचपल्लवा, करिकलभकरमृदिततमालकिसलयामोदिनी, मधुमदोपरक्तकेरलीकपोलकोमलच्छविना[1] संचरद्वनदेवताचरणालक्तकरसरञ्जितेनेव पल्लवप्रचयेन संछादिता, शुककुलदलितदाडिमीफलद्रवार्द्रीकृततलैरतिचपलकपिकम्पितकक्कोलच्युतपल्लवफलशबलैरनवरतनिपतितकुसुमरेणुपांसुलैः पथिकजनरचितलवङ्गपल्लवस्रस्तरैरतिकठोरनालिकेरकेतकीकरीरकेसरपरिगतप्रान्तैस्ताम्बूलीलतावनद्धपूगखण्डमण्डितैर्वनलक्ष्मीवासभवनैरिव विराजिता लतामण्डपैः, उन्मदमातङ्गकपोलस्थलगलितमदसलिलसिक्तेनेव निरन्तरमेलालतावनेन[3] मदगन्धिनान्धकारिता, नखमुखलग्नेभकुम्भमुक्ताफललुब्धैः शबरसेनापतिभिरभिहन्यमानकेसरिशता, प्रेताधिपनगरीव सदासंनिहितमृत्युभीषणा महिषाधिष्ठिता च, समरोद्यतपताकिनीव बाणासनारोपितशिलीमुखा विमुक्तसिंहनादा च, कात्यायनीव प्रचलितखड्गभीषणा रक्तचन्दनालंकृता च, कर्णीसुतकथेव संनिहितविपुलाचला शशोपगता च, कल्पान्तप्रदोषसंध्येव प्रनृत्तनीलकण्ठा पल्लवारुणा च, अमृतमथनवेलेव श्रीद्रुमोपशोभिता वारुणीपरिगता[4] च, प्रावृडिव घनश्यामलानेकशतह्रदालंकृता च, चन्द्रमूर्तिरिव सततमृक्षसार्थानुगता हरिणाध्यासिता च, राज्यस्थितिरिव चमरमृगवालव्यजनोपशोभिता समदगजघटापरिपालिता च, गिरितनयेव स्थाणुसंगता मृगपतिसेविता च, जानकीव प्रसूतकुशलवा निशाचरपरिगृहीता च, कामिनीव चन्दनमृगमदपरिमलवाहिनी रुचिरागुरु-

---

१. न-कपोलच्छविना. २. न-संस्तरैः. ३. न-अनवरतम्. ४. न-वारुणपरिगता.

तिलकभूषिता च, सोत्कण्ठेव विविधपल्लवानिलवीजिता समदना च, बालग्रीवेव व्याघ्रनखपङ्क्तिमण्डिता गण्डकाभरणा च, पानभूमिरिव प्रकटितमधुकोशकशता प्रकीर्णविविधकुसुमा च, क्वचित्प्रलयवेलेव महावराहदंष्ट्रासमुत्खातधरणिमण्डला, क्वचिद्दशमुखनगरीव चटुलवानरवृन्दभज्यमानतुङ्गशालाकुला, क्वचिदचिरनिर्वृत्तविवाहभूमिरिव हरितकुशसमित्कुसुमशमीपलाशशोभिता, क्वचिदुद्वृत्तमृगपतिनादभीतेव कण्टकिता, क्वचिन्मत्तेव कोकिलकुलप्रलापिनी, क्वचिदुन्मत्तेव वायुवेगकृततालशब्दा, क्वचिद्विधवेवोन्मुक्ततालपत्रा, क्वचित्समरभूमिरिव शरशतनिचिता, क्वचिदमरपतितनुरिव नेत्रसहस्रसंकुला, क्वचिन्नारायणमूर्तिरिव तमालनीला, क्वचित्पार्थरथपताकेव वा[1]नराक्रान्ता, क्वचिदवनिपतिद्वारभूमिरिव वेत्रलताशतदुष्प्रवेशा, क्वचिद्विराटनगरीव कीचकशतावृता, क्वचिदम्बरश्रीरिव व्याधानुगम्यमानतरलतारकमृगा, क्वचिद् गृहीतव्रतेव दर्भचीरजटावल्कलधारिणी, अपरिमितबहुलपत्रसंचयापि सप्तपर्णभूषिता, क्रूरसत्त्वापि मुनिजनसेविता, पुष्पवत्यपि पवित्रा विन्ध्याटवी नाम।

१८. तस्यां च दण्डकारण्यान्तःपाति सकलभुवनतलख्यातमुत्पत्तिक्षेत्रमिव भगवतो धर्मस्य सुरपतिप्रार्थनापीतसकलसागरसलिलस्य मेरुमत्सराद्गगनतलप्रसारितविकटशिरःसहस्रेण दिवसकररथगतिपथमपनेतुमभ्युद्यतेनावगणितसकलसुरसमूहवचसा विन्ध्यगिरिणाप्यनुल्लङ्घिताज्ञस्य जठरानलजीर्णवातापिदानवस्य सुरासुरमुकुटमकरपत्रकोटीचुम्बितचरणरजसो दक्षि[2]णाशामुखविशेषकस्य सुरलोकादेकहुंकारनिपातितनहुषप्रकटप्रभावस्य भगवतो महामुनेरगस्त्यस्य भार्यया लोपामुद्रया स्वयमुपरचितालवालकैः करपुटसलिलसेकसंवर्धितैः सुत-

---

१. न–कप्याक्रान्ता. २. न–दक्षिणामुख°.

निर्विशेषैरुपशोभितं पादपैः, तत्पुत्रेण च गृहीतव्रतेनाषाढिना पवित्रभस्मविरचितत्रिपुण्ड्रकाभरणेन कुशचीरवाससा मुञ्जमेखलाकलितमध्येन गृहीतहारितपर्णपुटेन प्रत्युटजमटता भिक्षां दृढदस्युनाम्ना पवित्रीकृतम्, अतिप्रभूतेध्माहरणाच्च यस्येध्मवाह इति पिता द्वितीयं नाम चकार, दिशि दिशि शुकहरितैश्च कदलीवनैः श्यामलीकृतपरिसरम्, सरिता च कलशयोनिपरिपीतसागरमार्गानुगतयेव पद्धविकया गोदावर्या परिगतमाश्रमपदमासीत्।



१९. यत्र च दशरथवचनमनुपालयन्नुत्सृष्टराज्यो दशवदनलक्ष्मीविभ्रमविरामो रामो महामुनिमगस्त्यमनुचरन्सह सीतया लक्ष्मणोपरचितरुचिरपर्णशालः पञ्चवट्यां कंचित्कालं सुखमुवास। चिरशून्येऽद्यापि यत्र शाखानिलीननिभृतपाण्डुकपोतपङ्क्तयो लग्नतापसाग्निहोत्रधूमराजय इव लक्ष्यन्ते तरवः। बलिकर्मकुसुमान्युद्धरन्त्याः सीतायाः करतलादिव संक्रान्तो यत्र रागः स्फुरति लताकिसलयेषु। यत्र च [1]पीतोद्गीर्णं जलनिधिजलमिव मुनिना निखिलमाश्रमोपान्तवर्तिषु विभक्तं महाह्रदेषु। यत्र दशरथसुतनिशितशरनिकरनिपातनिहतरजनिचरबलबहुलरुधिरसिक्तमूलमद्यापि तद्रागाविद्धनिर्गतपलाशमिवाभाति नवकिसलयमरण्यम्। अधुनापि यत्र जलधरसमये गम्भीरमभिनवजलधरनिवहनिनादमाकर्ण्य भगवतो रामस्य त्रिभुवनविवरव्यापिनश्चापघोषस्य स्मरन्तो न गृह्णन्ति शष्पकवलमजस्रमश्रुजललुलितदीनदृष्टयो वीक्ष्य शून्या दश दिशो जराजर्जरितविषाणकोटयो जानकीसंवर्धिता जीर्णमृगाः। यस्मिन्ननवरतमृगयानिहतशेषवनहरिणप्रोत्साहित इव कृतसीताविप्रलम्भः कनकमृगो राघवमतिदूरं जहार। यत्र च मैथिलीवियोगदुःखदुःखितौ [2]दशवदन-

---

१. न—पीतोद्गीर्णजलनिधिजलमिव.　　२. कपा—रावण°

विनाशपिशुनौ[1] चन्द्रसूर्याविव कबन्धग्रस्तौ समं रामलक्ष्मणौ त्रिभुवनभयं महच्चक्रतुः । अत्यायतश्च यस्मिन्दशरथसुतशरनिपातितो योजनबाहोर्बाहुरगस्त्यप्रसादेनागत[2]नहुषाजगरकायशङ्कामकरोदृषिजनस्य। जनकतनया च भर्त्रा विरहविनोदनार्थमुटजाभ्यन्तरलिखिता यत्र रामनिवासदर्शनोत्सुका पुनरिव धरणितलादुल्लसन्ती वनचरैरद्याप्यालोक्यते।

२०. तस्य चैवंविधस्य संप्रत्यपि प्रकटोपलक्ष्यमाणपूर्ववृत्तान्तस्यागस्त्याश्रमस्य नातिदूरे जलनिधिपानप्रकुपितवरुणोत्साहितेनागस्त्यमत्सरात्तदाश्रमसमीपवर्त्यपर इव वेधसा महाजलनिधिरुत्पादितः, प्रलयकालविघटिता[3]ष्टदिग्भागसंधिबन्धं गगनतलमिव भुवि निपातितम्, आदिवराहसमुद्धृतधरामण्डलस्थानमिव सलिलपूरितम्, अनवरतमज्जदुन्मदशबरकामिनीकुचकलशलुलितजलम्, उत्फुल्लकुमुदकुवलयकल्हारम्, उन्निद्रारविन्दमधुबिन्दुनिस्यन्दबद्धचन्द्रकम्, अलिकुलपटलांधकारितसौगन्धिकम्, आरसितसमदसारसम्, अम्बुरुहमधुपानमत्तकलहंसकामिनीकृतकोलाहलम्, अनेकजलचरपतंगशतसंचलनचञ्चलितवाचालवीचिमालम्, अनिलोल्लासितकल्लोलशिखरसीकरारब्धदुर्दिनम्, अशङ्कितावतीर्णाभिरम्भःक्रीडारागिणीभिः स्नानसमये वनदेवताभिः केशपाशकुसुमैः सुरभीकृतम्, एकदेशावतीर्णमुनिजनापूर्यमाणकमण्डलुकलजलध्वनिमनोहरम्, उन्मिषदुत्पलवनमध्यचारिभिः सवर्णतया रसितानुमेयैः कादम्बकदम्बकैरासेवितम्, अभिषेकावतीर्णपुलिन्दराजसुन्दरी[4]कुचचन्दनधूलिधवलिततरंगम्[5], उपान्तजातकेतकीरजःपटलबद्धकूलपुलिनम्, आसन्नाश्रमागततापसक्षालितार्द्रवल्कलकषायपाटलतटजलम्, उपतटविटपिपल्लवानिलवीजितम् अविरलतमालवीथिकान्धकारिताभिर्वालिनिर्वासितेन संचरता

---

१. न—सूचकौ. २. °प्रसादेनागत.° ३. न—विघट्टित. ४. न—शबरी. ५. न—धवलिततरम्.

प्रतिदिनमृष्यमूकवासिना सुग्रीवेणावलुप्तफलपरिलघुलताभिरुदवासितापसानां देवतार्चनोपयुक्तकुसुमाभिरुत्पतज्जलचरपतंगपक्षपुटविगलितजलबिन्दुसेकसुकुमारकिसलयाभिर्लतामण्डपतलस्थितशिखण्डिमण्डलारब्धताण्डवाभिरनेककुसुमपरिमलवाहिनीभिर्वनदेवताभिः श्वासवासिताभिरिव[1] वनराजिभिरुपरुद्धतीरम्, अपरसागराशङ्किभिः सलिलमादातुमवतीर्णैर्जलधरैरिव बहलपङ्कमलिनैर्वनकरिभिरनवरतमापीयमानसलिलम्, अगाधमनन्तमप्रतिममपां निधानं पम्पाभिधानं पद्मसरः। यत्र च विकचकुवलयप्रभाश्यामायमानपक्षपुटान्यद्यापि मूर्तिमद्रामशापग्रस्तानीव मध्यचारिणामालोक्यन्ते चक्र[2]नाम्नां मिथुनानि।

२१. तस्यैवंविधस्य पद्मसरसः पश्चिमे तीरे राघवशरप्रहार[3]जर्जरितजीर्णतालतरुखण्डस्य च समीपे दिग्गजकरदण्डानुकारिणा जरदजगरेण सततमावेष्टितमूलतया बद्धमहालवाल इव, तुङ्गस्कन्धावलम्बिभिरनिलवेल्लितैरहिनिर्मोकैर्धृतोत्तरीय इव, दिक्चक्रवालपरिमाणमिव गृह्णता भुवनान्तरालविप्रकीर्णेन शाखासंचयेन प्रलयकालताण्डवप्रसारितभुजसहस्रमुडुपतिशकलशेखरमिव विडम्बयितुमुद्यतः, पुराणतया पतनभयादिव गगन[4]स्कन्धलग्नः, निखिलशरीरव्यापिनीभिरतिदूरोन्नताभिर्जीर्णतया शिराभिरिव परिगतो व्रततिभिः, जरातिलकबिन्दुभिरिव कण्टकैराचिततनुः, इतस्ततः परिपीतसागरसलिलैर्गगनागतैः पत्ररथैरिव शाखान्तरेषु निलीयमानैः क्षणमम्बुभारालसैरार्द्रीकृतपल्लवैर्जलधरपटलैरप्यदृष्टशिखरदेशः, तुङ्गतया नन्दनवनश्रियमिवावलोकयितुमभ्युद्यतः, समीपवर्तिनामुपरि संचरतां गगनतलगमनखेदायासितानां रविरथतुरंगमाणां सृक्कपरिस्रुतैः फेनपटलैः संदेहिततूलराशिभिर्धवलीकृतशिखरशाखः, वनगजकपोलकण्डूयनलग्नमद-

---

१. न–स्वश्वास°; नपा–वनदेवतानिश्वास° २. न–चक्रवाकनाम्नाम्. ३. न–जर्जरितबालतरु°. ४. न–वायुस्कन्ध°.

निलीनमत्तमधुकरमालेन लोहशृङ्खलाबन्धनिश्चलेनेव कल्पस्थायिना मूलेन समुपेतः, कोटराभ्यन्तरनिविष्टैः स्फुरद्भिः सजीव इव मधुकरपटलैः, दुर्योधन इवोपलक्षितशकुनिपक्षपातः, नलिननाभ इव वनमालोपगूढः, नवजलधरव्यूह इव नभसि दर्शितोन्नतिः, अखिलभुवनतलावलोकनप्रासाद इव वनदेवतानाम्, अधिपतिरिव दण्डकारण्यस्य, नायक इव सर्ववनस्पतीनाम्, सखेव विन्ध्यस्य, शाखाबाहुभिरुपगूह्येव विन्ध्याटवीमवस्थितो महाञ्जीर्णः शाल्मलीवृक्षः।

२२. तत्र च शाखाग्रेषु कोटरोदरेषु पल्लवान्तरेषु स्कन्धसंधिषु जीर्णवल्कलविवरेषु महावकाशतया विश्रब्धविरचितकुलायसहस्राणि दुरारोहतया विगलितविनाशभयानि[1] नानादेशसमागतानि शुकशकुनिकुलानि प्रतिवसन्ति स्म। यैः परिणामविरलदलसंहतिरपि स वनस्पतिरविरलदलनिचयश्यामल इवोपलक्ष्यते दिवानिशं निलीनैः। ते च तस्मिन्वनस्पतावतिवाह्यातिवाह्य रजनीमात्मनीडेषु प्रतिदिनमुत्थायोत्थायाहारान्वेषणाय नभसि विरचितपङ्क्तयो मदकलहलधरहलमुखोत्क्षेपविकीर्णबहुस्रोतसमम्बरतले[2] कलिन्दकन्यामिव दर्शयन्तः सुरगजोन्मूलितविगलदाकाशगङ्गाकमलिनीशङ्कामुपजनयन्तो दिवसकररथतुरगप्रभानुलिप्तमिव गगनतलमुपपादयन्तः संचारिणीमिव मरकतस्थलीं बिडम्बयन्तः शैवलपल्लवावलीमिवाम्बरसरसि प्रसारयन्तो गगनविततैः पक्षपुटैः कदलीदलैरिव दिनकरखरकरनिकरपरिखेदिताशामुखानि वीजयन्तो वियति विसारिणीं शष्पवीथीमिवारचयन्तः सेन्द्रायुधमिवान्तरिक्षमादधाना विचरन्ति स्म शुकशकुनयः[3]। कृताहाराश्च पुनः प्रतिनिवृत्यात्मकुलायावस्थितेभ्यः शावकेभ्यो विविधान्फलरसान्कलममञ्जरीविकारांश्च प्रहतहरिणरुधिरानुरक्त-

---

१. न–विगतभयानि. २. नका–मुखाक्षेप°. ३. न–'शुकशकुनयः' नास्ति.

शार्दूलनखकोटिपाटलेन चञ्चुपुटेन दत्त्वा दत्त्वाधरीकृतसर्वस्नेहेनासाधारणेन गुरुणापत्यप्रेम्णा तस्मिन्नेव क्रोडान्तर्निहिततनयाः क्षपाः क्षपयन्ति स्म ।

२३. एकस्मिंश्च जीर्णकोटरे जायया सह निवसतः पश्चिमे वयसि वर्तमानस्य कथमपि पितुरहमेवैको[1] विधिवशात्सूनुरभवम् । अतिप्रबलया चाभिभूता ममैव जायमानस्य प्रसववेदनया जननी मे लोकान्तरमगमत् । अभिमतजायाविनाशशोकदुःखितोपि खलु तातः सुतस्नेहादन्तर्निगृह्य[2] पटुप्रसरमपि शोकमेकाकी मत्संवर्धनपर एवाभवत् । अतिपरिणतवयाश्च कुशचीरानुकारिणीमल्पावशिष्टजीर्णपिच्छजालजर्जरामवस्रस्तांसदेशशिथिलामपगतोत्पतनसंस्कारां पक्षसंततिमुद्वहन्नुपारूढकम्पतया च संतापकारिणीमङ्गलग्नां जरामिव विधुन्वन्नकठोरशेफालिकाकुसुमनालपिञ्जरेण कलममञ्जरीदलनमसृणितक्षीणोपान्तलेखेन स्फुटिताग्रकोटिना चञ्चुपुटेन परनीडनिपतिताभ्यः शालिवल्लरीभ्यस्तण्डुलकणानादायादाय तरुमूलनिपतितानि शुककुलावदलितानि फलशकलानि समाहृत्य परिभ्रमितुमशक्तो मह्यमदात् । प्रतिदिवसमात्मना च मदुपभुक्तशेषमकरोदशनम् ।

२४. एकदा तु प्रभातसंध्यारागलोहिते गगनतलकमलिनीमधुरक्त[3]पक्षसंपुटे वृद्धहंस इव मन्दाकिनीपुलिनादपरजलनिधितटमवतरति चन्द्रमसि, परिणतरङ्कुरोमपाण्डुनि व्रजति विशालतामाशाचक्रवाले, गजरुधिररक्तहरिसटालोमलोहिनीभिरातप्तलाक्षिकतन्तुपाटलाभिरायामिनीभिरशिशिरकिरणदीधितिभिः पद्मरागरत्नशलाकासंमार्जनीभिरिव समुत्सार्यमाणे गगनकुट्टिमकुसुमप्रकरे तारागणे, संध्यामुपासितुमुत्तराशावलम्बिनि मानससरस्तीरमिवावतरति सप्तर्षिमण्डले,

---

१. न--अहमेकः. २. न--स्नेहादभ्यन्तरे निरुध्य. ३. न--मध्वनुरक्तपक्षपुटे.

तटगतविघटित[1]शुक्तिसंपुटविप्रकीर्णमरुणकरप्रेरणाधोगलितमुडुगणमिव मुक्ताफलनिकरमुद्वहति धवलितपुलिनतटमुदन्वति पूर्वेतरे, तुषारबिन्दुवर्षिणि विबुद्धशिखिकुले विजृम्भमाणकेसरिणि करिणीकदम्बकप्रबोध्यमानसमदकरिणि क्षपाजलजडकेसरं कुसुमनिकरमुदयगिरिशिखरस्थितसवितारमिवोद्दिश्य पल्लवाञ्जलिभिः समुत्सृजति कानने, रासभरोमधूसरासु वनदेवताप्रासादानां तरूणां शिखरेषु पारावतमालायमानासु धर्मपताकास्विव समुन्मिषन्तीषु तपोवनाग्निहोत्रधूमलेखासु, अवश्यायसीकरिणि ललितकमलवने रतिखिन्नशबरसीमन्तिनीस्वेदजलकणिकापहारिणि वनमहिषरोमन्थफेनबिन्दुवाहिनि चलितपल्लवलतालास्योपदेशव्यसनिनि विघटमानकमलखण्डमधुसीकरासारवर्षिणि कुसुमामोदतर्पितालिजाले निशावसानजातजाडिम्नि मन्दमन्दसंचारिणि प्रवाति प्राभातिके मातरिश्वनि, कमलवनप्रबोधमङ्गलपाठकानामिभगण्डडिण्डिमानां मधुलिहां कुमुदोदरेषु घन[2]घटमानदलपुटनिबद्धपक्षसंहतीनामुच्च[3]रत्सु हुंकारेषु, प्रभातशिशिरमारुताहतमुत्तप्तजतुरसाश्लिष्टपक्ष्ममालमिव सशेषनिद्राजिह्मतारं चक्षुरुन्मीलयत्सु शनैः शनैरूषरशय्याधूसरक्रोडरोमराजिषु वनमृगेषु, इतस्ततः संचरत्सु वनचरेषु, विजृम्भमाणे श्रोत्रहारिणि पम्पासरःकलहंसकोलाहले, समुल्लसति नर्तितशिखण्डिमण्डले मनोहरे वनगजकर्णतालशब्दे, क्रमेण च गगनतलमार्गमवतरतो दिवसकरवारणस्यावचूलचामरकलाप इवोपलक्ष्यमाणे मञ्जिष्ठारागलोहिते किरणजाले, शनैः शनैरुदिते भगवति सवितरि, पम्पासरःपर्यन्ततरुशिखरसंचारिण्यध्यासितगिरिशिखरे दिवसकरजन्मनि हततारे पुनरिव कपीश्वरे वनमभिपतति बालातपे, स्पष्टे जाते प्रत्यूषसि, नचिरादिव दिव-

---

१. न--विघट्टित. २. न--विघटमान°. ३. न--निरुद्ध.°

साष्टमभागभाजि स्पष्टभासि भास्वति भूते, प्रयातेषु यथाभिमतानि दिगन्तराणि शुककुलेषु, कुलायनिलीननिभृतशावकसनाथेपि निःशब्दतया शून्य इव तस्मिन्वनस्पतौ, स्वनीडावस्थित एव ताते, मयि च शैशवादसंजातबलसमुद्भिद्यमानपक्षपुटे तातस्य समीपवर्तिनि कोटरगते, सहसैव तस्मिन्महावने संत्रासितसकलवनचरः सरभसमुत्पतत्पतत्रिपक्षपुटशब्दसंततो भीतकरिपोतचीत्कारपीवरः प्रचलितलताकुलितमत्तालिकुलक्वणितमांसलः परिभ्रमदुद्घोणवनवराहरवघर्घरो गिरिगुहासुप्तप्रबुद्धसिंहनादोपबृंहितः[1] कम्पयन्निव तरून्भगीरथावतार्यमाणगङ्गाप्रवाहकलकलबहलो भीतवनदेवताकर्णितो मृगयाकोलाहलध्वनिरुदचरत् । आकर्ण्य च तमहमश्रुतपूर्वमुपजातवेपथुरर्भकतया जर्जरितकर्णविवरो भयविह्वलः समीपवर्तिनः पितुः प्रतीकारबुद्ध्या जराशिथिलपक्षपुटान्तरमविशम् ।

२५. अनन्तरं च सरभसमितो गजयूथपतिलुलितकमलिनीपरिमलः, इतः क्रोडकुलदश्यमानभद्रमुस्तारसामोदः, इतः करिकलभभज्यमानसल्लकीकषायगन्धः, इतो निपतितशुष्कपत्रमर्मरध्वनिः, इतो वनमहिषविषाणकोटिकुलिशभिद्यमानवल्मीकधूलिः, इतो मृगकदम्बकम्, इतो वनगजकुलम्, इतो वनवराहयूथम्, इतो वनमाहिषवृन्दम्, इतः शिखण्डिमण्डलविरुतम्, इतः कपिञ्जलकुलकलकूजितम्, इतः कुररकुलक्वणितम्, इतो मृगपतिनखभिद्यमानकुम्भकुञ्जररासितम्, इयमार्द्रपङ्कमलिना वराहपद्धतिः, इयमभिनवशष्पकवलरसश्यामला हरिणरोमन्थफेनसंहतिः, इयमुन्मदगन्धगजगण्डकण्डूयनपरिमलालीनमुखरमधुकरविरुतिः,[2] एषा निपतितरुधिरबिन्दुसिक्तशुष्कपत्रपाटला रुरुपदवी, एतद्द्विरदचरणमृदितविटपपल्लवपटलम्, एतत्खड्गिकुलक्रीडितम्, एष नखकोटिविलिखित-

---

१. न–सिंहनिनादोप°. २. न–परिमलनिलीन.

विकटपत्रलेखो रुधिरपाटलः करिमौक्तिकदलदन्तुरो मृगपतिमार्गः, एषा प्रत्यग्रप्रसूतवनमृगीगर्भरुधिरलोहिनी भूमिः, इयमटवीवेणिकानुकारिणी पक्षचरस्य यूथपतेर्मदजलमालिना संचारवीथी, चमरीपंक्तिरियमनुगम्यताम्, उच्छुष्कमृगकरीषपांसुला त्वरिततरमध्यास्यतामियं वनस्थली, तरुशिखरमारुह्यताम्, आलोक्यतां दिगियम्, आकर्ण्यतामयं शब्दः, गृह्यतां धनुः, अवहितैः स्थीयताम्, विमुच्यन्तां श्वानः, इत्यन्योन्यमभिवदतो मृगयासक्तस्य महतो जनसमूहस्य तरुगहनान्तरितविग्रहस्य क्षोभितकाननं कोलाहलमशृणवम्।

२६. अथ नातिचिरा[1]दिवानुलेपनार्द्रमृदङ्गध्वनिधीरेण गिरिविवरविजृम्भितप्रतिनादगम्भीरेण शबरशरताडितानां केसरिणां निनादेन, संत्रस्तयूथमुक्तानामेकाकिनां च संचरतामनवरतकरास्फोटामिश्रेण जलधररसितानुकारिणा गजयूथपतीनां कण्ठगर्जितेन, सरभससारमेयविलुप्यमानावयवानामा[2]लोलकातरतरलतारकाणामेणकानां च करुणकूजितेन, निहतयूथपतीनां वियोगिनीनामनुगतकलभानां च स्थित्वा स्थित्वा समाकर्ण्य कलकलमुत्कर्णपल्लवानामितस्ततः परिभ्रमन्तीनां प्रत्यग्रपतिविनाशशोकदीर्घेण करिणीनां चीत्कृतेन, कतिपयादिवसप्रसूतानां च खड्गिधेनुकानां त्रासपरिभ्रष्टपोतान्वेषिणीनामुन्मुक्तकण्ठ[3]मतिकरुणमारसन्तीनामाक्रन्दितेन, तरुशिखरसमुत्पातितानामाकुलाकुलचारिणां च पत्ररथानां कोलाहलेन, रूपानुसारप्रधावितानां च मृग[4]यूनां युगपदतिरभसपादपाताभिहताया भुवः कम्पमिव जनयता चरणशब्देन, कर्णान्ताकृष्टज्यानां च मदकलकुररकामिनीकण्ठकूजित[5]कलेन शरनिकरवर्षिणां धनुषां निनादेन, पवनाहतिक्वणितधाराणामसीनां च कठिनमहिषस्कन्धपीठपातिनां रणितेन, शुनां च सरभ-

१. न—नातिचिरादेव. २. न—आलोलतरलतारकाणाम्. ३. न—'अतिकरुणम्' नास्ति. ४. नपी—मृगयूथानाम्. ५. न—कलशबलितेन.

